**बालानां सुखबोधाय भास्करेण सुमेधसा ।**
**रचितोऽयं समासेन जैमिनीयार्थसंग्रहः ॥ १ ॥**

**इति श्रीमहामहोपाध्यायलौगाक्षिभास्करविरचितपूर्वमीमांसार्थसंग्रहनामकं प्रकरणं समाप्तिमगात् ॥**

---

**ननु** किमनेन संग्रहनिरूपणेन विस्तृतभाष्यादिग्रन्थैरेव जैमिनीयन्यायार्थबोधसंभवादित्याशङ्क्य संग्रहनिरूपणे स्वप्रवृत्तिनिमित्तं प्रदर्शयति—**बालानामिति** । तेषां विस्तृतत्वेन दुःखग्राह्यत्वान्न तैर्बालशब्दितपूर्वमीमांसासंस्कारशून्यानां जैमिनीयन्यायार्थबोधः संभवति । अनेन तु तत्तद्विस्तृतशास्त्रप्रवेशद्वारा संभवत्येव स इति भावः ॥

टीकाविहीने तु कृता हि टीका पूर्वे तु तन्त्रे खलु संग्रहेऽस्मिन् ।
दुर्बोधशास्त्रे किमु मादृशानां दृष्ट्वापि दोषं न सहन्ति धीराः ॥ १ ॥

यदाज्ञया बन्धविमोक्षणं विना स्वधर्मसेवा फलहेतुतां गता ।
प्रणौमि सोमं मृडमादिकारणं किमन्यदेवैर्जनफल्गुहेतुभिः ॥ २ ॥

मदीययत्नः शिवपादसेवया गुरोः कटाक्षैकलवेन लब्धया ।
प्रयुज्यमानः शिवपादपङ्कजे स्वयं तु भूयान्मृडतोषकारणम् ॥ ३ ॥

सुजनपदविनीतो दुर्जनाद्दूरनिष्ठो
गुरुतरशिवभक्तस्तेन लब्धागमेक्षः ।
श्रुतिमणिपदनिष्ठो भिक्षुरामेश्वराख्यः
सुजननयनिवेशाय प्रबन्धं चकार ॥ ४ ॥

गुणगणमणिसिन्धुः शम्भुपादैकभक्तो
निगमशिरसि निष्ठो जातवैराग्यचित्तः ।
श्रुतिनलिनविकासे भानुभावो य ईश[1]-
स्तमिह महिमपूज्यं नौमि गोपं यतीन्द्रम् ॥ ५ ॥

---

[1] गोपालमित्यर्थः ।

तस्मादेव गुरुवरादभीष्टलब्धं गोपालाश्रमपदगीयमानदैवात् ।
येनोमाधवचरणाब्जसेविनात्र तं वन्दे महिमगुरुं विशालबुद्धिम् ॥ ६ ॥
या काशी निखिलगुरोर्मेश्वरस्य प्राणान्ते सकलशिवप्रदा प्रसिद्धा ।
यत्राहं सकलसुरेशलब्धतत्त्वस्तत्रेयं सुजनहितप्रदा निबद्धा ॥ ७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोपालेन्द्रसरस्वतीश्रीपूज्यपादशिष्य-
श्रीसदाशिवेन्द्रसरस्वतीशिष्येण श्रीरामेश्वरेण शिवयोगिभिक्षुणा
विरचिता मीमांसार्थसंग्रहकौमुदी चरमवर्णध्वंसमगात् ।

